॥ लघु राघवेन्द्रस्तोत्र ॥

॥ लघुराघवेंद्रस्तुतिः ॥

पूज्याय राघवेंद्राय सत्यधर्मरताय च ।
भजतां कल्पवृक्षाय नमतां कामधेनवे ॥ १॥

दुर्वादिध्वांतरवये वैष्णवींदीवरींदवे ।
नमो श्री राघवेंद्रगुरवे नमोऽत्यंतदयाळुवे ॥ २॥

श्रीसुधींद्राब्धिसंभूतान् राघवेंद्रकलानिधीन् ।
सेवे सज्ज्ञानसौख्यार्थं संतापत्रय शांतये ॥ ३॥

अघं द्रावयते यस्माद्वेंकारो वाञ्छितप्रदः ।
राघवेंद्रयतिस्तस्माल्लोके ख्यातो भविष्यति ॥ ४॥

व्यासेन व्याप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः ।
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदित किसलयः पुष्पितोऽयं जयेंद्राद् ।
अद्य श्री राघवेंद्राद्विलसति फलितो मध्वसिद्धांतशाखी ॥ ६॥

इति श्री लघुराघवेंद्रस्तुतिः सम्पूर्णम्
॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥